न्यते अनेन अस्मिन्निति वा विघ्नः । आयुध्यते अनेन इत्यायुधं इत्यादयः प्रयोगगम्याः । बहुलाधिकारात् विघात इत्याद्यपि ॥

२००६ **ट्वितोऽथुच्**[1] ।४।४।५७। ट्वितोऽधातोरकर्तरि अथुर्भवति ड्वितः क्त्रिः ॥ क इत् । वेपथुः श्वयथुः स्फूर्जथुः नन्दथुः भरथुः वमथुः ॥

२००७ **क्त्रेरिमे**[2] ।३।२।२०। क्त्रिरिमपर एव प्रयोज्यः ॥ पाकेन निर्वृत्तं पक्त्रिमम् । उप्त्रिमं कृत्रिमं विहित्रिमं याचित्रिमं भृत्रिमं दत्रिमं मक्त्रिमं ॥

२००८ **यज्यत्प्रच्छस्वप्रक्षो नः** ।४।४।५८। यजादिभ्योऽकर्तरि नो भवति ॥ यज्ञः यत्नः । छस्य शः । प्रश्नः स्वप्नः रक्ष्णः ॥

२००९ **विच्छेर्नङ्** ।४।४।५९। विच्छेरकर्तरि नङ् भवति ॥ विश्नः ॥

२०१० **व्याप्तौ भावेऽन ञिन्** ।४।४।६०। धातोर्भावे अनो ञिन् च भवतः व्याप्तौ गम्यमानायाम् ॥

२०११ **ञिनोऽण्** ।३।४।१३९। ञान्तात् ञिनन्ताच्च स्वार्थे अण् भवति ॥ सङ्कुटनं साङ्कोटिनमेषां । संरवणं सांराविणं सेनायाः ॥

२०१२ **स्त्रियां क्तिन्** ।४।४।६१।' धातोरकर्तरि स्त्रीलिङ्गे क्तिन् भवति ॥ कनाविती ॥

२०१३ **तेर्ग्रहादिभ्यः**[3] ।४।२।१३५। ग्रहादिभ्य एव क्तेरिड् भव-

---

१ टुश्च डुश्च टुडू तौ इतौ यस्मासौ टुड्वित् तस्मात् । टकारानुबन्धादथुप्रत्ययः । डकारानुबन्धात् क्त्रिप्रत्ययः । टुवेपृङ् चलने । टुवोश्वि गतिवृध्द्योः । टुवोस्फूर्जा वज्रनिर्घोषे । टुनद समृध्दौ । टुडुभृञ् धारणपोषणयोः ॥

२ इमेप्रत्यये परे क्त्रिप्रत्ययो भवति । "भावादिमः ।७७०।" टान्ताद्भावप्रत्ययान्तात् इमो भवतीति तद्धितः ॥ पाकेन निर्वृत्तं पाकिमं । तद्धितसूत्रेण लुक् । डुपचिष् पाके । डुवपि बीजसन्ताने । डुकृञ् करणे । डुधाञ् धारणे । धाञो हीति हिः ॥ डुयाचृञ् याचने । टुडुभृञ् । डुदाञ् ॥

३ तेर्ग्रहादेरेवेति नियमार्थं वचनं । तेनान्यत्र तेर्न भवति । वान्तिः दीप्तिः पाक्तिः । तेरेव ग्रहादेरिति नियमो न भवति उत्तरत्रालिटीति प्रतिषेधात् ॥

ति ॥ इति नियमादन्येभ्यो न भवति । हात्तिः यत्तिः । पचुङ् व्यक्तीकरणे । पङ्क्तिः भ्राष्टिः गुप्तिः ॥

**२०१४ लभादिभ्यः** ।४।४।६२। लभादिभ्योऽकर्तरि क्तिन् भवति ॥ लब्धिः क्षान्तिः कान्तिः । यङ्लुक् । ऊतिः पूतिः तातिः स्रस्तिः ऊढिः बाढिः स्मितिः कुतिः च्युतिः धृतिः मितिः दत्तिः प्यातिः मित्तिः स्वित्तिः क्षुब्धिः भ्रष्टिः ध्वस्तिः वृद्धिः स्यतिः क्लप्तिः तूर्तिः जूर्तिः स्मृतिः । ऋल्वादेरिति तस्य नः । दीर्णिः मत्तिः राष्टिः रतिः बुद्धिः । ग्रहादित्वादिट् । निपतितिः वान्तिः सत्तिः क्राष्टिः । ग्रहादित्वादिट् । निकुचितिः रूढिः भूतिः सुतिः द्रुतिः जितिः धीतिः पीतिः प्रातिः स्थितिः । लभादित्वात् व्यवस्थितिः दातिः ॥

**२०१५ ग्लाज्याहो निः** ।४।४।७४। ग्लादिभ्योऽकर्तरि स्त्रियां निर्भवति ॥ ग्लानिः ज्यानिः गीतिः ध्यातिः स्तृतिः ऋतिः तीर्णिः चित्तिः । ग्रहादित्वादिट् । अर्चितिः । छलुक् । हूर्तिः मूर्तिः स्फूर्तिः सक्तिः । ग्रहादित्वादिट् । निपठितिः तप्तिः जप्तिः यब्धिः गतिः सृप्तिः भणितिः कान्तिः नतिः यतिः आचान्तिः भ्रान्ति फुल्तिः क्ष्यूतिः ष्ठ्यूतिः ऊतिः वृष्टिः पुष्टिः ह्रष्टिः प्रष्टिः पृष्टिः द्राष्टिः दष्टिः[1]शन्तिः दग्धिः शूतिः उषितिः उदितिः ईष्टिः उप्तिः ऊढिः उतिः वीतिः हतिः धौतिः पक्तिः भक्तिः ॥

**२०१६ क्तिन्यपचायः** ।४।१।२४३। अपाच्चाय उपान्त्यस्य क्तिनीच् भवति ॥ यलुक् । अपचितिः । न आत् । खातिः माढिः गूढिः श्रितिः हृतिः भृतिः कृतिः नीतिः ॥ अदादिः ॥ जग्धिः विचिः मृष्टिः उक्तिः सुप्तिः उष्टिः रुतिः इतिः ख्यातिः मितिः ईर्तिः आशास्तिः ( शिष्टिः ) पृक्तिः सूतिः शीतिः अधीतिः न्हुतिः द्विष्टिः ॥

ह्वादिः ॥ हुतिः भीतिः हानिः मितिः दत्तिः हितिः निक्तिः ॥ दिवादिः ॥ द्यूतिः स्यूतिः नृत्तिः क्षिप्तिः विद्धिः शुष्टिः दुष्टिः श्लिष्टिः शक्तिः शुद्धिः सिद्धिः शान्तिः दान्तिः श्रान्तिः क्लान्तिः भ्रष्टिः कृष्टिः रुष्टिः

---

१ चिचिन्तिकथिपूजीत्यादिना प्राप्तस्याङोऽपवादः ॥

लुब्धिः ऋद्धिः गृद्धिः रद्धिः नष्टिः तृप्तिः दृप्तिः मुग्धिः मूढिः जीर्णिः शितिः शातिः छितिः छातिः सितिः दितिः जातिः दीप्तिः पूर्तिः क्लिष्टिः पत्तिः वित्तिः युक्तिः सृष्टिः प्रीतिः नद्धिः शप्तिः ॥

स्वादिः ॥ सुतिः विस्तृतिः वृतिः धूतिः दुतिः श्रुतिः प्रहितिः आप्तिः राद्धिः साद्धिः धृष्टिः ॥ क्र्यादिः ॥ क्रीतिः गृहीतिः । तो नः लूनिः धूनिः स्तीर्णिः कीर्णिः वूर्णिः शीर्णिः मूर्णिः पूर्तिः चीर्णिः ईर्णिः गीर्णिः ज्यानिः लीनिः ज्ञातिः अष्टिः वृत्तिः ॥ तुदादिः ॥ तुत्तिः दिष्टिः लिप्तिः सिक्तिः मुक्तिः लुप्तिः कृत्तिः क्षितिः मृतिः धृतिः पृष्टिः मक्तिः स्पृष्टिः मृष्टिः दृब्धिः इष्टिः गूर्तिः पृतिः जुष्टिः स्वक्तिः रब्धिः लब्धिः ॥ तनादिः ॥ ततिः सातिः क्षतिः मतिः ॥ रुधादिः ॥ रुद्धिः छित्तिः इद्धिः शिष्टिः पिष्टिः भक्तिः भुक्तिः अक्तिः ॥ ण्यन्तात् ॥ पाक्तिः याष्टिः इत्यादि शिष्टप्रयोगानुसारेण ज्ञातव्यम् ॥

**२०१७ स्त्रिष्यजस्तोः करणे** ।४।४।६३। स्त्रादिभ्यः करणे स्त्रियां क्तिन् भवति ॥ अनटोऽपवादः । स्रवन्त्यनयेति स्रुतिः । इच्छन्ति यजन्ति वा अनयेति इष्टिः । स्तुवन्त्यनयेति स्तुतिः ॥

**२०१८ गापापचो भावे** ।४।४।६४। गादिभ्यो भावे स्त्रियां क्तिन् भवति ॥ अङोऽपवादः[1] । सङ्गीतिः प्रपीतिः पक्तिः ॥

**२०१९ स्थो वा** ।४।४।६५। स्थो भावे स्त्रियां क्तिन् भवति वा ॥ व्यवस्थितिः । पक्षे अङ् । व्यवस्था ॥

**२०२० व्यतिहारे ञः** ।४।४।६६। व्यतिहारे भावे धातोः स्त्रियां ञो वा भवति ॥ व्याक्रोशी व्याकुष्टिर्वर्तते[2] । व्यावलेपी व्यावलिप्तिः ॥

**२०२१ ण्युक्षः** ।४।४।६७। ण्यन्तादुक्षश्च व्यतिहारे भावे स्त्रियां ञो वा भवति ॥ व्यातिचोरी व्यातिचर्ची व्यात्युक्षी ॥

---

१ उपसर्गादात इति वक्ष्यमाणसूत्रेण अङ् प्राप्तिः । षिच्चिन्तति प्राप्तिः ॥

२ परस्परमाक्रोशस्त्वेवं प्रयुज्यते । स्त्रियामिति किं? व्यतिहारो वर्तते ॥

**२०२२ व्रज्यजः क्यप्** ।४।४।६८। व्रज्यजिभ्यां भावे स्त्रियां क्यप् भवति ॥ व्रज्या इज्या ॥

**२०२३ कृञः शक्तिन् च** ।४।४।७१। कृञोऽकर्तरि स्त्रियां शः क्तिन् क्यप् च भवति ॥ क्रिया कृतिः कृत्या ॥

**२०२४ सम्पदादिभ्यः क्तिन्क्विप्** ।४।४।७२। सम्पदादिभ्यो कर्तरि स्त्रियां क्तिन्क्विपौ भवतः ॥ संपत्तिः विपत्तिः आपत्तिः प्रपत्तिः संवित्तिः । क्विप् । सम्पत् विपत् आपत् प्रतिपत् आशीः । आङश्शासूङ् इच्छायाम् । शासः कूङिति इतीत् । संवित् परिषत्

**२०२५ यूतिजूतिसातिहेतिकिर्त्यटाट्यामृगयेच्छाया-च्ञाकृपाः** ।४।४।७३। यूत्यादयः स्त्रियामकर्तरि निपात्यन्ते ॥ यूतिः जूतिः सातिः हेतिः कीर्तिः आटाट्या मृगया इच्छा याच्ञा कृपा ॥

**२०२६ णिवेत्त्यासश्रन्थघट्टवन्दो नः** ।४।४।७५। ण्यन्ते-भ्योऽवेत्त्यादिभ्यश्च स्त्रियामकर्तारि अनो भवति ॥ एधना भावना पाचना कारणा हापना चोरणा लक्षणा योजना वेदना आसना श्रन्थना घट्टना वन्दना ॥

**२०२७ सृचरो यः** ।४।४।७८। परेः सृचरिभ्यां स्त्रियामकर्तरि यो भवति ॥ परिसर्या परिचर्या ॥

**२०२८ जागुरश्च** ।४।४।७९। जागर्तेरकर्तारि स्त्रियामद् भवति यश्च ॥ जागरा जागर्या ॥

**२०२९ प्रत्ययात्** ।४।४।८०। प्रत्ययान्तात् स्त्रियामकर्तारि अद् भवति ॥ गोपाया चिकित्सा तितिक्षा चिकीर्षा कण्डूया लोलूया पुत्रीया पुत्रकाम्या ॥

---

१ यु मिश्रणे अत्र दीर्घो तिपात्यते । जु इति सौत्रो धातुः । षो अन्तकर्मणि अत्र स्यतेरित्वाभावः । हेतिः हन्तेर्हिनोतेर्वा हे भावः । कृत संशब्दने कीर्तयतेः संज्ञायां क्तिन् ॥ अटतेर्यः यद्वा द्विवचनम् । मृगयतेरिच्छतेश्चरः शप् च । इच्छेति भावे । अक-र्तरीति सामान्येनाधिकारेऽप्यभिधानतोऽर्थव्यवस्था ॥

**२०३० गुरोर्हलः** ।४।४।८१। गुरुमतो हलन्ताद्धातोरकर्तरि स्त्रियामङ् भवति ॥ स्पर्द्धा बाधा ईक्षा भिक्षा ईहा चेष्टा ईडा सेवा इत्यादयः ॥

**२०३१ षिच्चिन्तिपूजिकथिकुम्भिचर्च्यन्तर्धोऽङ्** ।४।४।८२। षितश्चिन्त्यादिभ्यश्च स्त्रियामकर्तारि अङ् भवति ॥ ङ इत् । घटा व्यथा प्रथा श्रदा त्वरा । ऋदृशोऽरित्यर् । जरा क्षिया चिन्ता पूजा कथा कुम्भा चर्चा अन्तर्धा ॥ लिङ्गान्तरे प्रत्ययान्तरमपि । चर्चः अन्तर्धिरित्यादि ॥

**२०३२ उपसर्गादातः** ।४।४।८३। उपसर्गादादन्तात् धातोः स्त्रियामकर्तारि अङ् भवति ॥ प्रज्ञा प्रदा उपधा ॥

**२०३३ भिदादयः क्वचित्** ।४।४।८४। भिदादयः स्त्रियामकर्तारि निपात्यन्ते क्वचिदर्थविशेषे ॥ भिदा विदा खिदा छिदा आरा धारा हारा गुहा इत्यादयः प्रयोगगम्याः ॥

**२०३४ संज्ञाभावे ण्वुः** ।४।४।८५। धातोरकर्तरि संज्ञायां भावे च स्त्रियां ण्वुर्भवति ॥ प्रच्छर्दिका प्रवाहिका प्रस्कन्दिता विचर्चिका एवंनामानो व्याधयः । भावे । आसिका शायिका इत्यादि ॥

**२०३५ प्रश्नाख्याने वेञ्** ।४।४।८६। प्रश्ने प्रतिवचने च धातोरकर्तरि स्त्रियामिञ् ण्वुश्च वा भवतः ॥ पक्षे यथा प्राप्तं च । कां कारीं कां कारिकां कां क्रियां कां कृतिं कां कृत्यां वा अकार्षीः । सर्वाः कारीः कारिकाः क्रियाः कृतीः कृत्याः अकार्षम् । एवं पाठी पाठिका पठितिः पाचो पाचिका पक्तिः गणी गणिका गणना इत्यादि ॥

**२०३६ पर्यायोत्पत्त्यर्हर्णे ण्वुः** ।४।४।८७। धातोरकर्तरि स्त्रियां

---

१ गुरोरिति किं? निपतीतिः । निगृहीतिः । हल इति किं? सीति शंसीतिः । अभादित्वादाप्तिः । राद्धिः । दीप्तिः । दस्तिः ॥

२ धर्माद्यैः परिचितपरीक्षणमुपधा । उपसर्गादिति किं? दतिः । श्रद्धेति प्रज्ञाश्रद्धार्चावृत्तेर्णः इति निपातनात्सिद्धम् ॥

३ ऋणेऽर्थे । क्तिनाद्यपवादः । गोपालिकामर्हति गोपालिकामुपभोक्तुं समर्थो भवतीत्यर्थः ॥

ण्वुर्भवति पर्यायादौ ॥ भवतः आसिका । भवतः शायिका । भवतो गामिका आसनादिपर्याय इत्यर्थः । घृतभोजिका उदपादि । गोपालिकामर्हति भवान् । इक्षुभक्षिकां धारयसि ॥

**२०३७ नञोऽनिः शापे** ।४।४।८८। नञो धातोरकर्तरि स्त्रियामनिर्भवति शापे ॥ अगमानिस्ते वृषल भूयात् इत्यादि ॥

**२०३८ नब्भावे क्तोऽभ्यादिभ्यः** ।४।४।८९। धातोर्नपुंसके भावे क्तो भवति न भ्यादिभ्यः ॥ हसितं जल्पितं शयितम् आसितं नृत्तं स्फुरितं भाषितम् इत्यादि । भ्यादिभ्यः । भयं वर्षमित्यादि ॥

**२०३९ करणाधारे चानट्** ।४।४।९०। करणे आधारे नब्भावे च धातोरनड् भवति न भ्यादिभ्यः ॥ ट इत् । विचयनी इध्मव्रश्चनः फलशातनः श्मश्रुकर्तनः । आधारे शयनम् अधिकरणं गोदोहनी तिलपीडनी राजधानी दशनं । प्रश्रथेति नलुक् । नब्भावे भवनं हसनं जल्पनं शयनं कथनं तक्षणमित्यादि । निष्ठीवनं निष्ठेवनं सीवनं सेवनम् इति बहुलाधिकारात् ॥

**२०४० पुन्नाम्नि घः प्रायः** ।४।४।९१। पुन्नाम्नि पुल्लिङ्गे नम्नि करणाधारयोर्धातोर्घो भवति ॥[1]

**२०४१ घेऽद्व्यांद्युपसर्गस्य** ।४।१।२१०। एकोपसर्गस्य छदेरुपान्त्यस्य घपरे णौ ह्रस्वो भवति ॥ प्रच्छाद्यते अनेनेति प्रच्छदः उरश्छदः दन्तच्छदः सितच्छदः प्लवः करः । अधिकरणे । आलीयते अस्मिन्नित्यालयः आकरः प्रायोग्रहणादनडादिरपि ॥

---

१ क्वचिन्न भवतीत्यपीत्यर्थः । पुन्नाम्नीति किं? हरणो दण्डः । पुंग्रहणं किं? विचयनी प्रसादनं । प्राय इति किं? दोहनः प्रसादनः । घकारो घेऽद्व्याद्युपसर्गस्येति विशेषणार्थः ॥

२ यद्यपि यस्य त्र्यादयः सन्ति तस्य द्वावपि स्तः तथापि सङ्ख्योत्तरोपजायमाना सत्यपि तत्र संख्यान्तरे संख्यान्तरकृतं वापदेशं निर्वर्तयति । न हि लोके द्विपुत्र आनीयतामित्युक्ते त्रिपुत्र आनीयते इत्यादिग्रहणम् । द्वि आदिर्येषां ते द्व्यादय उपसर्गा यस्यासौ तथोक्तः पुनर्नञ् ॥ एत्य कुर्वन्त्यस्मिन्निति आकरः ॥

**२०४२ गोचरसञ्चरकषनिकषखलभगवहव्रजव्यजापणनिगमम्** ।४।४।९२। गोचरादयः करणाधारयोः पुन्नाम्नि घान्ता निपात्यन्ते ॥ गावश्चरन्त्यस्मिन् इति गोचरः सञ्चरः कषः निकषः खलः भगः वहः व्रजः व्यजः आपणः निगमः ॥

**२०४३ हलो घञ्** ।४।४।९३। हलन्तात् पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ लेखः वेष्टः बन्धः वेगः अपामार्गः मार्गः आरामः प्रासादः ॥

**२०४४ तॄस्त्रोऽवात्** ।४।४।९४। अवात् तॄस्तॄभ्यां पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ अवतारः अवस्तारः ॥

**२०४५ समश्च हृञः** ।४।४।९५। समवाभ्यां हृञः पुन्नाम्नि करणाधारयोर्घञ् भवति ॥ संहारः अवहारः ॥

**२०४६ जारदाराध्यायन्यायोद्यावानायाधारावायाः**[2] ।४।४।९६। जारादयः पुन्नाम्नि घञन्ता निपात्यन्ते ॥ जारः दाराः अध्यायः न्यायः उद्यावः आनायः आधारः आवायः ॥

**२०४७ दुस्स्वीषतः कृच्छ्राकृच्छ्रे खः**[3] ।४।४।९९। कृच्छ्रे दुःखे दुसः अकृच्छ्रे स्वीषद्भ्यां च धातोः खो भवति ॥ स च सकर्मकात् कर्मणि अकर्मकाद् भावे ॥ ख इत् । दुःखेन भूयते अनेन दुर्भवं । सुखेन

---

१ हलो घञोऽपवादः । सञ्चरन्त्यनेनेति सञ्चरः । कषन्त्यस्मिन्निति कषः । खलन्ति सञ्चिन्वतेऽस्मिन्निति खलः । वहः स्कन्दप्रदेशे । व्यजः अज क्षेपणे ॥ आपणन्ति व्यवहरन्त्यस्मिन्नित्यापणः । नियमेन गच्छन्त्यस्मिन्निति निगमः ॥ पदमिति सुङ् पदमिति निपातनात्सिद्धम् ॥

२ जीर्यतेऽनेनेति जारः । दीर्यते पुरुष एभिरिति दाराः । अधीयतेऽस्मिन्नित्यध्यायः । नयत्यस्मिन्निति अनेनेति वा न्यायः । उद्युवन्त्यनेनेति उद्यावः । आनीयतेऽनेनेत्यानायः आनायः पुंसि जालं स्यादित्यमरः ॥ आध्रियतेऽस्मिन्नित्याधारः ॥ एत्य वयन्त्यस्मिन्नित्यावायः ॥

३ इतः करणाधारयोरिति निवृत्तम् । कृच्छ्रं दुःखं अकृच्छ्रं सुखम् । घञाद्यपवादः । सम्भवापेक्षं विशेषणम् । दुस्स्वीषत इति किं? कृच्छ्रेण कार्यो । कृच्छ्राकृच्छ्र इति किं? ईषल्लभ्यं अल्पलभ्यमित्यर्थः । खकार उत्तरत्र समर्थः खार्थेति विशेषणार्थश्च ॥

भूयतेऽनेन सुभवम् । ईषद्भवम् । एवं दुश्शयं सुशयम् ईषच्छयं । दुःखेन क्रियते दुष्करः । सुखेन क्रियते सुकरः ईषत्करः एवं दुर्बोधः सुबोधः इषद्बोधः दुर्लभः सुलभः ईषल्लभः इत्यादि सर्वत्र योज्यं ॥

**२०४८ च्वौ कर्त्राप्याद् भूकृञः** ।४।४।१००। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः पराभ्यां च्व्यर्थे वर्तमानाभ्यां कर्तृकर्मभ्यां परात् भुवः कृञश्च खो भवति ॥ खित्त्वात् मम् । दुःखेनानाढ्येनाढ्येन भूयते दुराढ्यंभवं देवदत्तेन । एवं स्वाढ्यंभवम् ईषदाढ्यंभवं । दुःखेनानाढ्यः आढ्यः क्रियते दुराढ्यंकरः स्वाढ्यंकरः ईषदाढ्यंकरः ॥

**२०४९ आतोऽनः** ।४।४।१०१। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः आदन्तात् धातोरनो भवति ॥ खापवादः । दुर्ज्ञानं सुज्ञानं ईषज्ज्ञानम् इत्यादि ॥

**२०५० शास्युधिदृशिधृषिमृषः** ।४।४।१०२। कृच्छ्राकृच्छ्रयोर्दुस्स्वीषद्भ्यः शासादिभ्योऽनो भवति ॥ दुःशासनः सुशासनः ईषच्छासनः दुर्योधनः सुयोधनः ईषद्योधनः दुर्दर्शनः सुदर्शनः ईषद्दर्शनः दुर्धर्षणः सुधर्षणः ईषद्धर्षणः दुर्मर्षणः सुमर्षणः ईषन्मर्षणः । योगविभागात् खोऽपि । दुर्द्धर्ष इत्यादि ॥

**२०५१ निषेधेऽलंखलौ क्त्वा**[1] ।४।४।१४१। अलमि खलौ चोपपदे धातोः क्त्वा वा भवति निषेधे ॥ क इत् । तस्वदित्यव्ययत्वम् । अलं कृत्वा । खलु कृत्वा । पक्षे । अलं करणेन । अनिषेधे । अलङ्कारः इत्यादि ॥

**२०५२ परावरे** ।४।४।१४२। परावरत्वे गम्ये धातोः क्त्वः प्यो वा भवति ॥

**२०५३ क्त्वोऽनञः**[2] **प्यः** ।२।२।१७१। समासान्तस्य क्त्वः प्यो

---

१ निषेधे वर्तमानयोरलं खलु इत्येतयोरुपपदयोर्धात्वोः क्त्वाप्रत्ययो वा भवति ॥ वावचनाद्यथाप्राप्तं च ॥ अलं बाले रुदित्वा अलं बाले रुदितेनेत्यर्थः । क्त्वाविषये खलुशब्दो निषेधार्थो द्रष्टव्यः । अलंखलाविति किं? मा भाविनाऽर्थो रुदितेन ॥

२ अनञ इत्यनेन नञ्सदृशमव्ययं ग्राह्यं तेन परमकृत्वा इत्यादौ प्यादेशो न भवति ॥

भवति न नञः ॥ प इत् । पर्वतमतिक्रम्य नदी । नदीमगत्वा पर्वतः ॥

२०५४ **प्राक्काले** ।४।४।१४४। अपरकालेन धातुनैककर्तृकात् प्रक्काले वर्तमानात् धातो ॒ क्त्वा भवति ॥ भोजनं पूर्वं पश्चाद्व्रजनं । भुक्त्वा व्रजति । एधित्वा वन्दित्वा । यौ हलादेरिति वा कित्त्वं । मुदित्वा मोदित्वा हत्त्वा तितिक्षित्त्वा तिजित्वा तेजित्वा त्रपित्वा त्रपूत्वा मीमांसित्वा पनायित्वा पनित्वा क्षमित्वा । क्विजलीति दीर्घः । क्षान्त्वा कामयित्वा ॥

२०५५ **त्व्यूदितः** ।४।२।१६१। ऊदितो धातोः क्त्वाया इड्वा भवति ॥ कामित्वा कान्त्वा क्नूयित्वा गाहित्वा गाढ्वा स्मित्वा च्युत्वा धृत्वा मित्वा दत्त्वा पवित्वा पूत्वा डयित्वा मेदित्वा स्वेदित्वा स्रम्भित्वा स्रब्ध्वा स्रंसित्वा स्रस्त्वा भ्रंशित्वा भ्रष्ट्वा ध्वंसित्वा ध्वस्त्वा ॥

२०५६ **त्कि** ।४।१।१५६। धातोरिडादौ त्कायां किद्वन्न भवति ॥ वर्तित्वा वृत्त्वा स्यन्दित्वा ॥

२०५७ **स्कन्दस्यन्दः** ।४।१।१५७। स्कन्दस्यन्दोः त्कायां किद्वन्न भवति ॥ स्यन्त्वा कल्पित्वा क्लृप्त्वा स्मृत्वा । कित्युगिति नेट् । दीर्त्वा सोढ्वा सहित्वा रत्वा बुध्वा पतित्वा वमित्वा वान्त्वा सत्त्वा शत्त्वा रूढ्वा भूत्वा जित्वा धीत्वा पत्विा घ्रात्वा ध्मात्वा स्थित्वा दात्वा ग्लात्वा गीत्वा ध्यात्वा तीर्त्वा चिकित्सित्वा सेधित्वा सिधित्वा सिध्वा स्कन्त्वा अञ्चित्वा अक्त्वा ॥ लुञ्च अपनये ॥

२०५८ **थफवञ्चिलुञ्च्यूतितृषिमृषिकृश इटि** ।४।१।१५१। नोपान्त्ययोः स्थफान्त्ययोर्वञ्च्यादीनां च इडादौ त्कायां किद्वद्वा भवति ॥

१ नकार उपान्त्ये सति थकारान्तफकान्तयोर्वांचि लुंचि ऋति तृषि मृषि कृश इत्येतेषां च इडादौ त्काप्रत्यये किद्वत्कार्यं भवति वा ॥ त्कीति प्रतिषेधविकल्पः । श्रथित्वा श्रन्थित्वा ग्रन्थित्वा । गुफित्वा गुम्फित्वा । न्युपान्त्य इति किं? कुथ को थित्वा । पुथ पोथित्वा । रिफ रेफित्वा । न्युपान्त्य इति थफविशेषणं नान्येषां सम्भवव्यभिचारात् । त्कायामिति किं? ग्रथितः ग्रथितवान् । इटीति किं? वक्त्वा मृष्ट्वा । वंचू मृषू इत्यूदितौ त्कायां विकल्पितेटौ ॥

लुचित्वा लुञ्चित्वा लोचित्वा वक्त्वा त्यक्त्वा ॥

२०५९ नशजस्ति त्वि न्युपान्त्ये[1] ।४।१।१५०। नशःनोपान्त्यस्य च जान्तस्य तादौ क्त्वायां किद्वद्वा भवति ॥ सङ्क्त्वा सक्त्वा गोपायित्वा गुपित्वा गुप्त्वा गोपित्वा गत्वा नत्वा यत्वा क्रमित्वा ॥

२०६० क्रमस्त्वि[2] ।४।१।१४०। क्रमो जलादौ क्त्वायामचो दीर्घो वा भवति ॥ क्रान्त्वा क्रन्त्वा भ्रमित्वा भ्रान्त्वा शसित्वा शस्त्वा । मृषू सहने । मृषित्वा मर्षित्वा मृष्ट्वा कृष्ट्वा प्लुषित्वा प्लोषित्वा प्लुष्ट्वा दृष्ट्वा दष्ट्वा शंसित्वा शस्त्वा दग्ध्वा । इटि क्त्वीत्यकित्त्वान्नेक् । श्वयित्वा । क्तक्त्वामितीट् ॥

२०६१ मृड्मृद्गुदकुषक्लिश्वद्वसः[3] ।४।१।१५८। मृडादीनामिडादौ क्त्वायां किद्वद् भवति ॥ उषित्वा उदित्वा इष्ट्वा उप्त्वा ऊढ्वा उत्वा वीत्वा हूत्वा धावित्वा धौत्वा पक्त्वा भक्त्वा रक्त्वा रङ्क्त्वा खनित्वा खात्वा शप्त्वा गूहित्वा गूढ्वा श्रित्वा हृत्वा नीत्वा ॥ अथादादिः ॥ जग्ध्वा विदित्वा हत्वा भूत्वा मार्जित्वा मृष्ट्वा उक्त्वा रुदित्वा सुप्त्वा जागरित्वा दरिद्रित्वा शासित्वा शिष्ट्वा वशित्वा रुत्वा इत्वा यात्वा मित्वा ईशित्वा सूत्वा शयित्वा द्विष्ट्वा ऊर्णुत्वा स्तुत्वा उक्त्वा ॥ अथ ह्वादिः ॥

२०६२ हाकस्त्वि ।४।२।११७। हाकस्तादौ क्त्वायां हिर्भवति ॥ हित्वा मित्वा भृत्वा दत्त्वा हित्वा निक्त्वा । अथ दिवादिः ॥ देवित्वा । ऊच् । घूत्वा नर्तित्वा क्षिप्त्वा विद्ध्वा पुष्ट्वा क्षुधित्वा क्षोधित्वा शुद्ध्वा शमित्वा शान्त्वा असित्वा अस्त्वा भ्रशित्वा भ्रष्ट्वा तृषित्वा तर्षित्वा रुषित्वा रोषित्वा रुष्ट्वा क्लिदित्वा क्लेदित्वा क्लित्त्वा गर्धित्वा गृद्ध्वा रधित्वा रद्ध्वा नशित्वा नष्ट्वा नंष्ट्वा द्रुहित्वा द्रोहित्वा द्रुग्ध्वा द्रूढ्वा ॥

---

१ नकार उपान्त्ये सति । नोपान्त्य इति विशेषणं जान्तस्य । तीति किं? विभज्य । त्वीति किं? नंष्ट्वा ॥

२ त्व्यूदितः इति इट् विकल्प्यते । क्लिजलि कित्यनुनासिक इत्यादिना नित्यं दीर्घप्राप्तावनेन विकल्पः ॥

३ मृड् सुखसहने । मृद क्षोदे । गुद परिवेष्टने । कुष् निष्कर्षे । क्लिशो विबाधने । नेति निर्वृत्तम् । स्क्वीति निषेधे यौ हलादेरिति विकल्पे च प्राप्ते वचनम् ॥

**२०६३ जॄव्रश्च्योस्क्त्वि** ।४।२।१५७। जॄव्रश्चिभ्यां क्त्वायां इट् नित्यं भावति ॥ जरित्वा जरीत्वा शित्वा शात्वा छित्वा छात्वा सित्वा दित्वा जनित्वा जात्वा क्लिशित्वा क्लेशित्वा क्लिष्ट्वा युध्वा मत्वा सृष्ट्वा सूत्वा लीत्वा नध्वा ॥ अथ स्वादिः ॥ सुत्वा वृत्वा दुत्वा दूत्वा श्रुत्वा आप्त्वा दम्भित्वा दब्ध्वा अशित्वा अष्ट्वा ॥ अथ क्र्यादिः । क्रीत्वा गृहीत्वा पूत्वा पूर्त्वा ईर्त्वा जीत्वा ज्ञात्वा बध्वा । किद्वत्त्वे नलुक् । श्रथित्वा श्रन्थित्वा मथित्वा मन्थित्वा ग्रथित्वा ग्रन्थित्वा मृदित्वा मृडित्वा कुषित्वा क्षुभित्वा क्षोभित्वा क्लिशित्वा क्लिष्ट्वा अशित्वा मुषित्वा ॥ अथ तुदादिः ॥ तुत्त्वा भृष्ट्वा लिप्त्वा सिक्त्वा मुक्त्वा लुप्त्वा कर्तित्वा क्षित्वा मृत्वा कीर्त्वा दृत्वा पृष्ट्वा मक्त्वा मङ्क्त्वा रुक्त्वा भुक्त्वा स्पृष्ट्वा मृष्ट्वा विष्ट्वा नुत्वा व्रश्चित्वा उज्झित्वा लुभित्वा लोभित्वा । गुफ गुम्फ ग्रन्थने । गुफित्वा गोफित्वा गुम्फित्वा इषित्वा एषित्वा इष्ट्वा कुटित्वा गुरित्वा विजित्वा स्वक्त्वा स्वङ्क्त्वा रब्ध्वा लब्ध्वा ॥ अथ तनादिः । तनित्वा तत्वा सानित्वा सात्वा क्षणित्वा क्षात्वा मनित्वा मत्वा ॥ अथ रुधादिः । रुद्ध्वा भित्त्वा युक्त्वा इन्धित्वा पिष्ट्वा भक्त्वा भङ्क्त्वा अञ्जित्वा अक्त्वा अङ्क्त्वा ॥ अथ चुरादिः । चोरयित्वा कथयित्वा इत्यादि ॥ उपसर्गपूर्वत्वे ॥

**२०६४ डाच्व्यूर्याद्यनुकरणं च ति** ।१।१।२६। डाजन्तं च्व्यन्तमूर्याद्यनुकरणं उपसर्गाश्च धातोः सम्बन्धि तिसंज्ञं भवति ॥ तिदुस्स्वतीति समासे ॥

**२०६५ क्त्वोऽनञः प्यः** ।२।२।१७१। समासान्तक्त्वायाः प्यो भवति न नञः ॥ प इत् । तगर्थः । प्रैध्य अभिवन्द्य प्रहद्य अपत्रप्य प्रक्षम्य । णिलुक् । प्रकाम्य प्रोय्य विगाह्य विस्मित्य प्रच्युत्य विभृत्य ॥

१ जॄ वयोहानौ इति क्र्यादिः । जॄषीति दैवादिकस्य सानुबन्धस्येट् । क्र्यादौ जीर्त्वा इति चिन्तामणावुक्तत्वात् ॥

२ डाच्च च्विश्च ऊर्यादि च अनुकरणं चेति द्वन्द्वः । लघुध्यजाद्यदल्पाजर्च्यमेकमिति च्वेः पूर्वनिपातः प्राप्नोति । अत्र तु च्विश्च ऊर्यादि च अनुकरणं चेति द्वन्द्वे पुनर्डाचा द्वन्द्वः । श्रूयमाणः शब्दो व्यक्तोऽव्यक्तो वा अभेदोपचारेण कुतश्चित्सादृश्यादनुक्रियते तदनुकरणम् ॥

**२०६६ इ मेङः** ।४।२।१०५। मेङः प्ये इद्वा भवति ॥ अपमित्य अपमाय प्रदाय परित्राय प्रपूय उड्डीय प्रमिद्य प्रस्विद्य विस्रभ्य विस्रस्य अवभ्रश्य प्रध्वस्य विवृत्य प्रस्यद्य प्रक्लृप्य विस्मृत्य प्रदीर्य प्रसह्य ॥

**२०६७ मो वा** ।४।१।२६३। हनादीनां मध्ये मान्तस्य प्ये लुग् वा भवति ॥ विरम्य विरत्य निबुध्य विपत्य प्रवम्य प्रसद्य प्ररुह्य अनुभूय विजित्य प्रधाय प्रपाय आघ्राय आध्माय प्रस्थाय प्रदाय प्रग्लाय सङ्गाय आध्याय वितीर्य विचिकित्स्य प्रसिध्य प्रस्कद्य प्राङ्क्य विलुच्य प्रवच्य सन्त्यज्य प्रसज्य प्रगुप्य प्रणत्य प्रणम्य नियत्य नियम्य प्रक्रम्य विभ्रम्य प्रमुप्य विकृप्य सम्पृप्य सन्दृश्य विदृश्य प्रशस्य प्रदह्य प्रतिशुत्य प्रोप्य अनूह्य समिज्य प्रोप्य । प्ये चेति नेक् । प्रवाय ॥

**२०६८ व्यः** ।४।१।११३। व्येञः प्ये परे यञ इग्न भवति ॥ संव्याय ॥

**२०६९ परेर्वा** ।४।१।११४। परेर्व्येञः प्ये यञ इग्वा भवति ॥ परिव्याय परिवीय आहूय प्रधाव्य विपच्य सम्भज्य विरज्य प्रखन्य प्रखाय अभिशस्य विगुह्य आश्रित्य प्रहृत्य प्रकृत्य प्रणीय ॥ अदादिः ॥ प्रजग्ध्य संविद्य ॥

**२०७० प्ये** ।४।१।२६२। हनादीनां प्ये लुग् भवति ॥ प्रहत्य प्रमृज्य प्रोच्य प्ररुद्य प्रसुप्य प्रजागर्य प्रदरिद्य अनुशिष्य समुश्य प्ररुत्य समित्य अधीत्य प्रयाय प्रमाय अधीश्य प्रसूय अतिशय्य अधीत्य प्रद्विष्य प्रोर्णुत्य प्रस्तुत्य प्रोच्य ॥ ह्वादिः ॥ आहुत्य विहाय प्रमाय निभृत्य प्रदाय विधाय प्रणिज्य ॥ दिवादिः ॥ दीर्घः । प्रदीव्य प्रनृत्य संक्षिप्य आविद्य प्रपुष्य प्रक्षुध्य संशुध्य प्रशम्य प्रास्य प्रभ्रश्य वितृप्य प्रकुप्य विक्लिद्य अभिगृध्य प्रणश्य अभिद्रुह्य निर्जीर्य निशाय निच्छाय व्यवसाय प्रदाय प्रजाय प्रजन्य संक्लिश्य नियुध्य अभिमत्य उपयुज्य विसृज्य प्रसूय विलीय सन्नह्य ॥ स्वादिः ॥ प्रसुत्य आवृत्य विधूय संश्रुत्य प्राप्य प्रधृष्य प्रदभ्य व्यश्य ॥ क्र्यादिः ॥ विक्रीय प्रगृह्य सम्पूर्य आपूर्य आचीर्य ॥

**२०७१ ज्यः** ।४।१।११२। ज्यः प्ये यञ इग् न भवति ॥ प्रज्याय विज्ञाय संबध्य प्रश्रथ्य विमथ्य संग्रथ्य प्रमृद्य सम्मृज्य प्रगुद्य निष्कुप्य

संक्षुभ्य संक्लिश्य प्राश्य प्रमुष्य ॥ तुदादिः ॥ वितुद्य प्रभृज्ज्य आलिप्य निषिच्य विमुच्य विलुप्य विकृत्य ॥

२०७२ **क्षेरीः** ।४।२।१०६। क्षेः प्ये ईद् भवति ॥ प्रक्षीय प्रमृत्य विकीर्य आहत्य आपृच्छ्य निमज्ज्य प्ररुज्य संस्पृश्य आमृश्य निविश्य वि-नुद्य प्रवृश्च्य प्रोञ्झ्य प्रलुभ्य निगुफ्य अभीप्य सङ्कुच्य आगूर्य उद्विज्य आस्वज्य आरभ्य उपलभ्य ॥ तनादिः ॥ प्रतत्य प्रसत्य प्रसाय प्रक्षत्य विनत्य ॥ रुधादिः ॥ निरुध्य विभिद्य नियुज्य समिध्य प्रपिष्य विभज्य व्यज्य ॥ चुरादिः ॥ प्रचोर्य प्रचिन्त्य ॥

२०७३ **लघोर्हलः प्येऽय्** ।४।२।१०३। लघोः परो यो हल् ततः परस्य णेः प्येऽय् भवति ॥ प्रकथय्य विगणय्य विघटय्य प्रशमय्य ॥

२०७४ **वाऽऽप्नोः** ।४।२।१०४। आप्नोतेर्णेः प्ये अय् वा भवति ॥ प्रापय्य प्राप्य । डाच् । पटपटाकृत्य । च्वि । शुक्लीकृत्य । ऊर्यादि । ऊरीकृत्य । अनुकरणं । खात्कृत्य ॥

२०७५ **तिरोऽन्तर्धौ** ।१।१।३१। अन्तर्धौ पिधाने तिरस् इत्यव्ययं धातोः सम्बन्धि तिसंज्ञं भवति ॥ तिरोभूय तिरोधाय ॥

२०७६ **नित्यं हस्तेपाणौ स्वीकृतौ** ।१।१।३६। हस्ते पाणौ इत्येते अव्यये स्वीकृतौ कृञो धातोः सम्बन्धिनी तिसंज्ञे भवतः ॥ हस्ते-कृत्य पाणौकृत्य ॥

२०७७ **प्राध्वं[२] बन्धे** ।१।१।३६। आनुकूल्ये प्राध्वमित्यव्ययं कृञो धातोस्सम्बन्धि तिसंज्ञं भवति ॥ प्राध्वंकृत्य । शेषं सर्वं शास्त्रे ज्ञेयं ॥

२०७८ **पूर्वाग्रे[३] प्रथमाभीक्ष्ण्ये खमुञ्** ।४।४।१४५। पूर्वादिषूपप-

---

१ धातोर्यो लघुस्ततः परो यो हल् तस्मात्परस्य णेः नित्यं अय् इत्यादेशो भवति ॥ लघोरिति किं? प्रतिपाद्य गतः । हल् इति भूतपूर्वगतिव्युदासार्थम् । लघोरिति ह्युच्यमाने हल इत्यसति प्ये लघोरव्यवहितो णिर्न भवति । तत्र किमेकेन वर्णेन व्यवधानमात्रेऽयं उत भूतपूर्वगतिरिति सन्दिह्येत । तत्र पूर्वगतौ प्रकटय्य इत्यादावेव स्यात् ॥

२ प्राध्वमिति मकारान्तमव्ययं आनुकूल्ये वर्तते । आनुकूल्यार्थकं प्राध्वमित्यमरः ॥ तदानुकूल्यं बन्धहेतुकं बन्ध इत्युच्यते । तथाच बन्धहेतुके आनुकूल्ये मान्तः प्राध्वमिति शब्दः कृञो धातोः सम्बधी तिसंज्ञो भवति ॥ बन्ध इति किं? प्रगतमध्वानं प्राध्वं ॥

३ पूर्वः अग्रे प्रथमः इत्येतेषूपपदेषु आभीक्ष्ण्यधात्वर्थोपाधौ वक्ष्यमाणे तुल्यकर्तृकेऽर्थे

देषु आभीक्ष्ण्ये चार्थविशेषणे प्राक्काले धातोः खमुञ् वा भवति॥ खुतौ अश्वेतः। पूर्वभोजं अग्रेभोजं प्रथमंभोजं दायंदायं । पक्षे त्वा । पूर्वं भुक्त्वा इत्यादि ॥

**२०७९ अन्यथैवंकथमित्थमः कृञोऽनर्थकात्** ।४।४।१४६। अन्यथादिभ्यः स्वार्थराहितात् कृञस्तुल्यकर्तृके खमुञ् वा भवति ॥ अन्यथाकारम् एवंकारं कथंकारम् इत्थंकारं भुङ्क्ते । पक्षे । अन्यथा कृत्वा भुङ्क्ते इत्यादि ॥

**२०८० आप्यादाक्रोशे** ।४।४।१४८। आक्रोशे गम्ये कर्मणः कृञः प्राक्काले खमुञ् वा भवति तुल्यकर्तृके ॥ चोरंकारमाक्रोशति । चोरं कृत्वा आक्रोशति । चोरोऽयमित्याक्रोशतीत्यर्थः ॥

**२०८१ विदृशिभ्यः कात्स्न्ये णम्** ।४।४।१५०। कर्मणो विदादिभ्यो दृशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति कात्स्न्र्ये गम्ये ॥ अतिथिवेदं भोजयति । कन्यादर्शं वरयति ॥

**२०८२ यावतो जीवविन्दात्** ।४।४।१५१। यावतो जीववि-न्दाभ्यां णम् वा भवति तुल्यकर्तृके ॥ यावज्जीवमधीते । यावज्जीवति ताव-दधीते इत्यर्थः । यावद्वेदं गृह्णाति । यावद्विन्दति तावद्गृह्णातीत्यर्थः ॥

**२०८३ चर्मोदरात् पूरेः** ।४।४।१५२। चर्मोदराभ्यां पूरेः प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ चर्मपूरमास्ते । उदरपूरमास्ते । चर्मोदरं च पूरयित्वा आस्ते इत्यर्थः ॥

**२०८४ तृतीयोपदंशः** ।४।४।१५५। तृतीयान्तेन युक्तादुपदंशः प्राक्काले तुल्यकर्तृके णम् वा भवति॥ मूलकोपदंशं भुङ्क्ते मूलकेनोपदश्य भुङ्क्ते इत्यर्थः

**२०८५ हिंसार्थात् तुल्याप्यात्** ।४।४।१५६। तृतीयान्तेन युक्तात्तुल्यकर्मणः तुल्यकर्तृकाच्च हिंसार्थाद्धातोः प्राक्काले णम् वा भवति ॥ खड्गप्रहारं शत्रुं जयति । खड्गेन प्रहृत्य शत्रुं जयति इत्यर्थः ॥

---

वर्तमानाद्धातोः ततो खमुञ् प्रत्ययो वा भवति । खमुञा मुक्ते क्त्वा ॥ अत्रायं वाक्यार्थो भवति पूर्वं भुज्यते ततो व्रजतीति पूर्वशब्दोऽत्र प्राक्काले न तत्पदे ॥

१ बहुवचनात् त्रयाणामपि विदीनां ग्रहणं । अन्यथा अदाद्यनदाद्योरदादेरेव ग्रहणं निरनुबन्धकस्येति वा । कात्स्न्र्ये इति किं? अतिथिं विदित्वा भोजयति । कन्यां दृष्ट्वा वरयति । विच्च विच विच्ल विदः । विदश्च दृशिश्च विद्दृशयस्तेभ्यः इति समासः ।

**२०८६ तूर्णेऽपादानेन** ।४।४।१५९। अपादानेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये ॥ शय्योत्थायं धावति । शय्यायाः उत्थाय तूर्णं धावतीत्यर्थः ॥

**२०८७ द्वितीयया** ।४।४।१६०। द्वितीयान्तेन युक्ताद्धातोः प्राक्काले तुल्यकर्तृके णम् वा भवति तूर्णे गम्ये ॥ यष्टिग्राहं धावति । यष्टिं गृहीत्वा तूर्णं धावतीत्यर्थः ॥

**२०८८ तृष्यसः कालेनान्तरे** ।४।४।१६३। कालवाचिना द्वितीयान्तेन युक्ताभ्यामन्तरे तृष्यसिभ्यां प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ द्व्यहतर्षं । द्व्यहं तर्षित्वा गावः पिबन्ति । अन्तर्मुहूर्तात्यासम् । अन्तर्मुहूर्तमत्यस्य पर्याप्तिं लभते इत्यर्थः ॥

**२०८९ ग्रहादिशो नाम्ना** ।४।४।१६४। द्वितीयान्तेन नामशब्देन युक्तात् ग्रहेरादिशेश्च प्राक्काले तुल्यकर्तृके णम् वा भवति ॥ नामग्राहमाख्याति । नामादेशं वक्ति । नाम गृहीत्वा व्याख्यातीत्यादि ॥

**२०९० तूष्णीमा** ।४।४।१६८। तूष्णीमित्यव्ययेन युक्ताद् भुवः प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः ॥ तूष्णीम्भावं तूष्णीम्भूय तिष्ठति । तूष्णीं भूत्वा तिष्ठतीत्यर्थः ॥

**२०९१ स्वाङ्गात् तसा कृभ्वः** ।४।४।१६९। तसन्तेन स्वाङ्गवाचिना युक्तात् कृञो भुवश्च णम् क्त्वा च भवतः ॥ मुखतःकारं मुखतःकृत्य मुखतोभावं मुखतोभूय गतः ॥

---

१ ञितृषा पिपासायाम । असू क्षेपणे । क्रियामन्तरयतीत्यन्तरः क्रियाव्यवधायको विच्छेदकस्तस्मिन् । क्रियाविच्छेदको मध्यस्थः । द्व्यहतर्षं द्व्यहादेः पूर्वापरपानाद्यन्तरे तृष्यति । तृष्यस इति किं? द्व्यहमुपास्य भुङ्क्ते । कालेनेति किं? योजनं तर्पित्वा गावः पिबन्ति । अन्तर इति किं? अहरत्यस्य एष्यन् गतः । क्रिया क्रियामेवान्तर्यतीति क्रियाग्रहणं न क्रियते ॥

२ 'भुवोऽनूचानुलोम्ये ।४।४।१६७। इत्यधिकृत्य । भू इत्येतस्माद्धातोरनूजित्यनेनाव्ययेन योगे आनुलोम्ये गम्यमाने णम्क्त्वाप्रत्ययौ भवतः । आनुलोम्यमानुकूल्यं परचित्ताराधनं । अन्वग्भवं अन्वग्भूय अन्वग्भूत्वा तिष्ठति अनुकूलो भूत्वेत्यर्थः इत्यमोघवृत्तौ ॥

**२०९२ च्वौ धाण्विनानाना** ।४।४।१७०। च्व्यर्थे धाणन्तेन विनानानाभ्यां च युक्तात् कृञो भुवश्च प्राक्काले तुल्यकर्तृके णम् क्त्वा च भवतः ॥ अद्विधा द्विधा कृत्वा द्विधाकारं । द्विधाकृत्य । एवं द्विधाभावं द्विधाभूय । ऐकध्यंकारं ऐकध्यंकृत्य ऐकध्यंभावम् ऐकध्यंभूय । विनाकारं विनाकृत्य विनाभावं विनाभूय । नानाकारं नानाकृत्य नानाभावं नानाभूय ॥

**२०९३ शुष्कचूर्णरूक्षादाप्यात् पिषस्तस्मिन् णम्** ।४।४।१७१। शुष्कादिभ्यः कर्मभ्यः पिषो णम् वा भवति तस्मिन्नेव पिषावुपपदे ॥ शुष्कपेषं पिनष्टि । चूर्णपेषं पिनष्टि । रूक्षपेषं पिनष्टि ॥

**२०९४ कृञ्ग्रहोऽकृतजीवात्** ।४।४।१७२। अकृतशब्दात् कृञो णम् वा भवति । जीवशब्दात् ग्रहे तस्मिन् धातावुपपदे ॥ अकृतकारं करोति । जीवग्राहं गृह्णाति ॥

**२०९५ निमूलात् कषः** ।४।४।१७३। कर्मणो निमूलात् कषेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ निमूलकाषं कषति ॥

**२०९६ समूलाद् घ्नश्च** ।४।४।१७४। कर्मणस्समूलात् हन्तेः कषश्च णम् वा भवति । तस्मिन् धातावुपपदे ॥ समूलघातं हन्ति । समूलकाषं कषति ॥

**२०९७ करणात्** ।४।४।१७५। करणवाचिनः सुबन्ताद्धन्तेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ पाणिघातं हन्ति पाणिना हन्तीत्यर्थः । एवं खड्गघातं हन्ति खड्गेन हन्तीत्यर्थः ॥

**२०९८ नाम्नि बन्धः** ।४।४।१७८। करणवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मिन् धातावुपपदे ॥ मर्कटबन्धं बध्नाति । मर्कटनाम्ना बन्धेन बध्नातीत्यर्थः ॥

---

१ च्वाविति किं? द्विधा कृत्वा काष्ठानि गतः । संख्याया धा इत्यारभ्य अ तद्वति धाण् इति प्रत्याहारः ॥

२ बन्ध इति प्रकृतिर्नामविशेषणं च । बध्यर्थस्य बन्धनस्य यन्नाम तद्विषयात्करणवाचिनः । उट्टालिकाबन्धं बध्नाति । चण्डालिकाबन्धं बध्नाति । क्रौञ्चबन्धं बध्नाति महिषिकाबन्धं बध्नाति । अट्टालकादीनि बन्धननामधेयानि तैर्बन्धैर्बध्नातीत्यर्थः ॥ अन्ये नाम्नीति प्रत्ययोपाधिं मन्यन्ते । प्रत्ययान्तं चेन्नाम भवति ॥ तेषामट्टालिकाबन्धस्तमित्येवमादीनि बन्धनामधेयानि ॥

**२०९९ आधारात्** ।४।४।१७९। आधारवाचिनो नाम्नो बन्धेर्णम् वा भवति तस्मिन्नुपपदे ॥ चक्रबन्धं बध्नाति । चक्रनाम्नि बन्धे बध्नातीत्यर्थः ॥

**२१०० कर्तुर्जीवपुरुषान्नशिवहः** ।४।४।१८०। कर्तृवाचिनो जीवशब्दान्नशेर्णम् वा भवति पुरुषशब्दाद्वहः तस्मिन्नुपपदे ॥ जीवनाशं नश्यति । जीवो नश्यतीत्यर्थः । पुरुषवाहं वहति । पुरुषो भूत्वा वहतीत्यर्थः ॥

**२१०१ ऊर्ध्वात् पूश्शुषः** ।४।४।१८१। कर्तुरूर्ध्वशब्दात् पूरिशुषेभ्यां णम् वा भवति तस्मिन्नुपपदे ॥ ऊर्ध्वपूरं पूर्यते ऊर्ध्वं पूर्यते इत्यर्थः । ऊर्ध्वशोषं शुष्यति ऊर्ध्वं शुष्यतीत्यर्थः ॥

**२१०२ आप्याच्चेवे** ।४।४।१८२। औपम्ये[1] कर्मणः कर्तुश्च पराद्धातोः णम् वा भवति तस्मिन्नुपपदे ॥ रत्ननिधायं निदधाति रत्नमिव निदधातीत्यर्थः । नैकतभेदं भिनत्ति शैलं । धनचायं चिनोति धर्मं । कर्ता महामतिनाशं नश्यति नास्तिकः तद्वन्नश्यतीत्यर्थः । एवं पण्डितमारं म्रियते । बालमारं म्रियते इत्यादि ॥

**२१०३ समर्थास्त्यर्थ[2]धृषज्ञाशकग्लाघटसहार्हारभलभक्रमे तुम्** ।४।४।१८३। समर्थास्त्यर्थयोरुपपदयोर्धृषादिषु चोपपदेषु धातोस्तुम् वा भवति ॥ भोक्तुं समर्थः । भोक्तुं पर्याप्तः । भोक्तुमस्ति । भोक्तुं सम्भवति । भोक्तुं धृष्णोति । भोक्तुं जानाति । भोक्तुं शक्नोति । भोक्तुं ग्लायति । भोक्तुं घटते । भोक्तुं सहते । भोक्तुमर्हति । भोक्तुमारभते । भोक्तुं लभते । भोक्तुं प्रक्रमते । पक्षे भोजनसमर्थ इत्यादि ॥

**२१०४ तदर्थायां[3] क्रियायां वुण् लृट् च** ।४।४।१८४।

---

१ औपम्ये सादृश्ये गम्यमाने । धनमिव धर्मं चिनोति । महाबलस्य मन्त्री महामतिरिति कश्चिन्मिथ्यादृष्टिः ॥

२ समर्थश्च अस्तिश्च समर्थास्ति तौ अर्थौ अभिधेयौ येषां ते समर्थास्त्यर्थाः पुनर्द्वंद्व ॥ ञिधृषा प्रागल्भ्ये । शक मर्षणे । भोक्तुं समर्थ इत्यत्र भोजने सामर्थ्यं प्रतीयते भोक्तुं प्रक्रमते अत्र भुजेरवाद्यावस्थाने क्रियान्तरम् ॥ शक्तिग्रहणमसमर्थार्थं शक्यमेवंविधं कर्तुमिति सौकर्यं प्रतीयते सम्भवो वा ॥ शक्त्या भुज्यते इत्यादावनभिधानान्न भवति ॥

३ तदर्थायां तस्यै इयं तदर्था तस्यां तन्निमित्तायाम् । यस्माद्धातोः स तुम्प्रत्ययो तदभिधेयार्थं चेत्क्रियान्तरं गम्यते ततस्तुम् । क्रियायामिति किं? भिक्षिष्ये ।

धातोर्वुण्लटौ तुम् च भवन्ति । तदर्थायां क्रियायां प्रयुज्यमानायाम् ॥ भोजको व्रजति । भोक्ष्ये इति व्रजति । भोक्तुं व्रजति ॥

**२१०५ लिङ्तुमिच्छार्थे तुल्यकर्तृके** ।४।४।१८६। इच्छार्थे तुल्यकर्तृके तदर्थे क्रियान्तरे उपपदे धातोर्लिङ्तुमौ भवतः ॥ भुञ्जीयेतीच्छति भोक्तुमिच्छति कामयते । इत्याद्यनुक्तं सर्वं शास्त्रे ज्ञेयम् ॥

॥ इति कृत्सङ्ग्रहस्समाप्तः ॥

वन्दारुवृन्दपरिघट्टविलोलिताक्षवृन्दारकेश्वरकिरीटतटावकीर्णैः ॥
मन्दारपुष्पनिकरैर्विहितोपहारं वन्दामहे जिनपतेः पदपद्मयुग्मम् ॥ १ ॥

यो जानाति समं समस्तमनिशं यं सूरयस्संश्रिताः
येनादर्शि विमुक्तिवर्त्म सुधियो यस्मै स्पृहां कुर्वते ॥
यस्मात्तत्त्वविनिश्चयोऽप्रतिहतं यस्यैव शास्त्रं जयो
यस्मिन् विस्मयनीयपुण्यमहिमा भूयात् स वः श्रेयसे ॥ २ ॥

सुविवेचितपदरूपा प्रकरणरचनाप्रवेशमुखसुभगा ॥
वाङ्मयमूर्तिस्सौरी कृतिरियमधिवसतु बुधहृदयम् ॥ ३ ॥

गहनं व्याकरणं स्यात् तत्रापि प्रक्रिया महागहनम् ॥
लिङ्लुङ्सन्यङ् कष्टं तस्मादपि धेट्परं महाकष्टम् ॥ ४ ॥

अम्भोजनेत्रं हरितोरुगात्रं दयाकलत्रं वरशक्तिपात्रम् ॥
भव्याब्जमित्रं भुवने पवित्रं नाभेयपुत्रं प्रणमामि नित्यम्॥ ५ ॥

मुकुरविमलगण्डं चन्द्रसंकाशतुण्डं गजकरभुजदण्डं कामदाहाग्निकुण्डम् ॥
विनुतमुनिपषण्डं गोमठेशप्रचण्डं गुणनिवहकरण्डं नौमि नाभेयपिण्डम् ॥

॥ इति प्रक्रियासंग्रहसहितं शाकटायनव्याकरणं समाप्तम् ॥

॥ श्रीरस्तु ॥

१ वर्तमाने इच्छार्थे तुल्यकर्तृके उपपदे यस्माद्धातोर्लिङ्तुमौ उत्पद्येते तदर्थस्य चेत् कर्ता इच्छार्थस्यापि भवति ॥ इच्छार्थे इति किं? भोजको व्रजति । तुल्यकर्तृक इति किं? इच्छामि भुंक्तां भवान् । क्रियायां तदर्थायामिति किं? इच्छन् भुंक्ते ॥

# ॥ शाकटायनीयसूत्रपाठः ॥

अइउण् । ऋक् । एओङ् । ऐऔच् । हयवरलञ् । ञमङणनम् । जबगडदश् । झभघढधष् । खफछठथट् । चटतव् । कपय् । शषसंअः×क≍पर् । हल् ॥

१ सात्मेतेत्
२ उता स्वः
३ तेयान्
४ भाव्योऽग्
५ अप्रयोगीत्
६ स्वस्थानास्यैक्ये
७ आसन्नः
८ (संबन्धिनां सम्बन्धे)
९ घड्वति संख्या
१० बहुगणं भेदे
११ (कसमासेऽध्यर्धः)
१२ अर्धपूर्वपदो डत्
१३ पौत्रादि वृद्धम्
१४ प्रपौत्राद्यस्त्रीवंश्यज्यायोभ्रात्रोः सति युवा
१५ (सत् सपिण्डेऽधिवयस्स्थाने वा)
१६ (युववृद्धं कुत्सार्चे)
१७ नाम दुः
१८ (त्यदादिः)
१९ यस्याक्वादिरादैच्
२० (देश एवैङ् छादौ)
२१ प्राग्देशे
२२ क्रियार्थो धातुः
२३ दाधा ध्वब्
२४ प्रादिर्नाप्रत्यये
२५ तस्यागतार्थाधिपर्यर्चास्वत्यतिक्रमात्युपसर्गः प्राक्
२६ डाच्च्व्यूर्याद्यनुकरणं च ति
२७ (कारिकालमदोऽन्तस्मदसतस्स्थित्यादिभूषानुपदेशापरीग्रहादरक्षेपे)
२८ (कणेमनः श्रद्धोच्छेदे)
२९ अस्तं पुरोऽव्ययम्
३० गत्यर्थवदोऽच्छः
३१ तिरोऽन्तर्धौ
३२ कृञो वा
३३ (मनस्युरस्युपाजेऽन्वाजेमध्येपदेनिवचने)
३४ (स्वाम्येऽधिः)

१ कंसस्थं सूत्रं प्रक्रियासंग्रहे न संगृहीतमिति ज्ञेयम् ॥

३५ साक्षादाद्यच्वि
३६ नित्यं हस्तेपाणो स्वीकृतौ
३७ ( जीविकोपनिषदिवे )
३८ प्राध्वं बन्धे
३९ तस्वनूङामधणूतस्यांत्कान्तुन्तिसुङसस्वाभस्वरादीन्यव्ययम्
४० घ्यसख्यद्वन्द्वपतीदुत्
४१ प्रत्ययः कृतोऽषष्ठ्याः
४२ इजाद्यायात्तद्धितः
४३ घ्याद्यतिङ्कृत्
४४ परः
४५ मिदचोऽन्त्यात्
४६ ( स्पर्धे )
४७ षष्ठ्याः स्थानेऽन्तेऽलः
४८ तस्मादादेः
४९ शिदाङिदल्
५० स्थानीवाऽनलाश्रये
५१ परेऽचः प्राचोऽक्किदीर्घयद्यासदस्क्लुग्विधौ
५२ श्लुचीगेनत्
५३ टिदादिः
५४ किदन्तः
५५ ( विशेषणम् )
५६ ( प्राक्पञ्चमी )
५७ ( नसप्तम्यघ्यादिषु )
५८ ( तस्यादेः )
५९ ( प्रत्ययन्यकृप्यत्प्रकृत्यादेः )
६० ( कृत्सतिकारकस्यापि )
६१ तिङ्ग वाक्यम्
६२ सुङ् पदम्
६३ नं क्ये
६४ सिद्धल्यधातोः
६५ नवृत्यन्तः
६६ स्तं मत्वर्थे
६७ ( मनुर्नभोऽङ्गिरो वति )
६८ विरामेऽगिदनाङ्चाद्यण्वानुनासिकः
६९ चर्जशः
७० न
७१ एचोऽच्ययवायाव्
७२ यञ्वेवादिकः
७३ अस्वे
७४ ह्रस्वो वापदे
७५ ऋत्यकः
७६ ( ऋॄश्चोस्साचः )
७७ दीर्घः
७८ शस्यक्
७९ नन्तः पुंसः
८० दृलुच्यणः
८१ सहिवहोऽस्यौः
८२ इक्येङ्र्
८३ एजूच्यैच्
८४ प्रस्योढोढयूहैषैष्ये

८५ स्वैरस्वैर्यक्षौहिण्याम्
८६ ओमाङि परः
८७ (एवेऽनियोगे)
८८ वौष्ठौतौ समासे
८९ आर्तृतीयाया ऋते
९० प्रदशार्णवसनकम्बलवत्सतर-स्यर्णे
९१ ऋत्यारुपसर्गस्य
९२ (सुपि वा)
९३ तथानिर्णेध्येङ्येङ्
९४ पदान्तेऽस्येङः
९५ गोरोङ्वा
९६ अवोऽच्यनक्षे
९७ इन्द्रे
९८ वातायनेऽक्षे
९९ न प्लुतस्यानितौ
१०० गितः
१०१ चादेरचोऽनाङः
१०२ ओतः
१०३ (सौ वेतौ)
१०४ (ऊँ चोञः)
१०५ (मयोऽचि वोऽसन्)
१०६ हलोऽनुनासिकेऽनुनासिकः स्वः
१०७ प्रत्यये
१०८ रीस्योः
१०९ म्नां जय्यपदान्ते
११० शल्यनुस्वारः
१११ मम्मो हलि तौ
११२ ( हि ल्व्यम्नि )
११३ सम्राट्
११४ ( खय् खयश्शरि वा )
११५ ( शरोऽनु द्वे )
११६ ( यञो मयः )
११७ अचो ह्रोऽह्रूचः
११८ अदीर्घात्
११९ न संयोगे
१२० (पुत्रस्यादिपुत्रादिन्याक्रोशे)
१२१ ( अचि )
१२२ शरः
१२३ ह्रस्वान् ङमः पदान्ते
१२४ दीर्घाच्छो वा
१२५ ( प्लुतात् )
१२६ अजाङ्माङः
१२७ ( डाज्भाजोऽतो लुगितौ )
१२८ ( न द्व्युक्तेः )
१२९ ( तः )
१३० डाच्यादौ
१३१ द्वो द्वि
१३२ ( हलो यमि यमो (मां) वा)
१३३ ( जारि जरस्वे वा )
१३४ उदस्स्थास्तम्भः
१३५ चर्
१३६ जषि जश्

१३७ श्चौ श्चू स्त्वोः
१३८ ष्टौ ष्टू
१३९ न शात्
१४० टोः पदान्तेनाम्नगरीनवतेः
१४१ तोष्षि
१४२ लि लः
१४३ जशो हो झष्वा
१४४ शश्छोऽमि
१४५ ङ्णो गकुडक् शरि
१४६ ड्नस्तट् सोऽश्चः
१४७ नश्शि जक्
१४८ नृनः पि रीरक्
१४९ कांस्कान् सीसक्
१५० छव्यम्यप्रशानः
१५१ पुमः खयि
१५२ ( समस्स्क्रासि ग्लुक् च )
१५३ व्योऽप्याघोभोभगोः
१५४ ( अच्यस्पष्टश्च )
१५५ वानुञ्यात्
१५६ रेर्येः
१५७ अतोऽद्धष्युः
१५८ हल्यनञ्समासे लुक्तस्मात्
१५९ ( तदः पादपूरणे )
१६० रोऽह्नोऽप्यसुब्रूपरात्रिरथन्तरे
१६१ विसर्जनीयस्य
१६२ ( वाहर्पत्यादिषु )
१६३ सश्छव्यशारि
१६४ शारि वा
१६५ लुक् खयि परे
१६६ कुपौ×क≍पम्
१६७ तिरसस्तेस्सिः
१३८ नमस्पुरसः
१६९ चतुर्निर्दुर्बहिराविःप्रादुसाम्
१७० सुचो वा
१७१ इसुसोऽपेक्षायाम्
१७२ (नाक्रियैकार्थे)
१७३ (समासेऽसमस्तस्य)
१७४ (पदेऽधश्शिरस)
१७५ कृकमिकंसकुशाकर्णीकुम्भ-
पात्रेऽतोऽनव्ययस्य
१७६ प्रत्यये
१७७ न रन्हः काम्ये
१७८ ह्रस्वात्सुपस्ति
१७९ निसोऽनासेवायां तपे
१८० कस्कादिषु

॥ इति शाकटायनीयसूत्रपाठे प्रथम-
स्याध्यायस्य प्रथमः पादः समाप्तः ॥

---

१ नपोऽचो ह्रस्वः
२ पञ्चतोऽनेकतरस्यान्यादेर्दक्
स्वमोः
३ अलुग्वा
४ अतोऽम्
५ श्लुक्

६ ( जरसो वा )
७ इको लुक्
८ पुमांश्चान्यतोऽच्यपि
९ दध्यस्थिसक्थ्यक्ष्णोऽनङ्
१० नम् सुपि
११ शावचः
१२ जलाम्
१३ ( ततः प्रागार्यवज्रस्य )
१४ अज्झेरशतुः
१५ न नम्
१६ ङीग्योर्वादश्चः
१७ शप्श्यात्
१८ जश्शसाश्शिः
१९ आङश्चौतो गीः
२० ङितो याट्
२१ टौस्येत्
२२ इदुतो गिग्वौतोऽस्त्रेः
२३ जस्येङ्
२४ ङिरौत्
२५ न्यंशादाम्
२६ घेर्ङैरनाटि
२७ नास्त्रीटः
२८ ङ्येङ्
२९ स्त्रिया वाट्
३० य्वोऽपुंसः
३१ वेयुवोऽस्त्रियाः
३२ नामामः
३३ नम् ह्रस्वाद्सादः
३४ रष्णा सङ्ख्यानाम्
३५ त्रेस्त्रयः
३६ मोऽणोऽमः
३७ जराया ङसिन्द्रस्याचि
३८ धातोास्तकारकसमस्तानेका-
चोऽतत्सयोगाद्यन्योः
३९ दृन्पुन करवर्षाभिर्भुवः
४० प्रत्ययेऽसुधीणः
४१ भ्रूहल्श्नोश्चेयुवौ
४२ स्त्रियाः
४३ वाम्शामि
४४ दो मोऽस्यादसो माद्रुश्चापि-
न्यसन्
४५ वाऽद्रेः
४६ गी बहुप्वेः
४७ न्लुक् सुबाश्रये
४८ ( श्योऽलुचि )
४९ परे
५० +ष्रान्नो णः
५१ श्रुल्दुस्तौ नान्तरे
५२ घि घ्नः
५३ ( पदेऽनाङ्च्यतद्धिते )
५४ अन्तक्षुभ्रादीनाम्
५५ नृतेर्यङः

---

+१ चिह्नितानि सूत्राणि प्रक्रियासंग्र-
हटीकायां विवृतानि

५६ अभिन्ने
५७ ( पुर्वपद्स्थाद्वान्तनम्सुपः )
५८ सक्केकाचोः
५९ ( क्तोऽषि )
६० + क्विञस्..प्षिः
६१ + शर्नमः
६२ सिचो न यङि
६३ ( सुञस्स्यसनि )
६४ ( सेषतेर्गतौ )
६५ शास्वसिघस्सिकृतस्यासक्-
सातोऽबहुपदात्
६६ षढः कस्सि
६७ रः पदान्ते विसर्जनीयः
६८ धातोर्वोर्गिदीर्घोऽयहलनि चा-
च्छुर्कुरोः
६९ म्वोश्च मो निः
७० अनडुद्द्युदुष्णिग्दिग्दृक्स्पृग्-
दधृक्परिव्राट्
७१ ( नग्वा )
७२ सजूरहस्सोऽतिप्यक्कस्स्रन्सु-
ध्वन्सो रिः
७३ सिपि दश्च वा
७४ रः सुप्सि
७५ जलो जश्
७६ बशो भष् झषस्स्ध्वोश्चैकाचः
प्रत्यये
७७ धाञो जाले च
७८ ( यङोऽन्येषाम् )
७९ ( घेस्तथः )
८० अधः
८१ इञो लिलुङां धो ढः
८२ वेड्ञेः
८३ हः
८४ दादेरेधादेर्घः
८५ नि घ्नः
८६ द्रुहमुहस्नुहष्णिहो वा
८७ नहो धः
८८ चोः कुः
८९ युज्यञ्चिकुञ्चः
९० व्रश्चभ्रस्जमृजमृजयजराज-
भ्राजच्छशः षः
९१ संयोगस्यादिस्कोर्लुक्
९२ पदस्य
९३ ( रात्सः )
९४ ला
९५ नः
९६ मान्तोपान्तजयो मतोर्मो वः
९७ ( नाम्नि )
९८ ( अष्ठीवच्चक्रीवत्कक्षीवच्चर्म-
ण्वद्रुमण्वत् )
९९ ( अब्धौ चोदन्वान् )
१०० राजन्वान् सुराज्ञि
१०१ नोर्म्यादिभ्यः
१०२ ङ्चौष्ठ्यृतोऽपदस्यार्

१०३ ङातो डुः
१०४ स्त्यत्य उः
१०५ एङो लुक्
१०६ एदे
१०७ डित्यन्त्याजादेः
१०८ नः पथिमथ्यृभुक्षः
१०९ श्यनप्सुत्स्वन्
११० थो नट्
१११ आस्स्यनः
११२ द्योः
११३ अनडुहो नम्
११४ उगिदचोऽनेधादेः
११५ युञ्जोऽसमासे
११६ पुंसो ङस्
११७ ओत औ
११८ डाम्शसः
११९ ऋत्सखीदुशनस्पुरुदंशोऽनेहसस्सोः
१२० हल्ङ्याड्दीर्घाल्लुक्
१२१ वोशनोशनन्नघोभगोभोस्स्वमश्चैकामन्त्रणे
१२२ ह्रस्वोऽन्नित्याटः
१२३ व्यचोऽम्बार्थस्य
१२४ एदाङः
१२५ ह्रस्वैतो लुचि चारेङ्
१२६ ( पुत्रेऽर्हे मातुः कचोऽङ् )
१२७ वोऽनडुच्चतरोः
१२८ वाः
१२९ न डान्लुक्
१३० सखित ऐ च
१३१ क्रोष्टोऽक्रोष्टृ
१३२ वाच्यापि
१३३ त्रप्स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रद्दीर्घः
१३४ न्यक्
१३५ स्महतः
१३६ इन्हन्पूषार्यम्णश्शौ
१३७ सावतोश्च
१३८ असोऽनेधादः
१३९ श्चे
१४० नाम्यतिसृचतुष्षः
१४१ नुर्वा
१४२ ( संख्याविसायाद्ह्नस्याहन्ङौ )
१४३ पद्न्नोमास्हृन्निशसन्यूषन्दोषन्यकन्शकन्नुदन्नासंश्वासुटि
१४४ पादोऽपदस्य ग्यसुट्च्छिण्यादौ पद्
१४५ कस उस्
१४६ श्वोऽचः
१४७ उद ई
१४८ श्वयुवन्मघोनां वस्येसुप्युश्
१४९ श्वोऽनोऽहल्वमात्
१५० ङिग्योर्वा

१५१ आतोऽनाङः श्लुक्
१५२ डतिष्णां संख्यानां जश्शसः
१५३ अष्ट औश्
१५४ अव्ययस्य
१५५ अव्ययीभावस्य
१५६ नातः
१५७ अमपञ्चम्याः
१५८ तृतीयाया वा
१५९ सप्तम्याः
१६० ( नद्यृद्धवंश्यस्य )
१६१ परस्परान्योऽन्येतरेतरस्यां सुपो वा पुंसि
१६२ भ्यत्याः
१६३ बह्वोसि स्भ्येत्
१६४ ऐस् भिसोऽन्नशः
१६५ ङसास्येस्स्येनाद्यम्
१६६ सर्वादेङ्र्यस्येः स्मिन्स्मात्स्मै
१६७ जसश्शिः
१७८ नेमार्धप्रथमचरमाल्पकतिपयतयस्य वा
१७९ ( द्वन्द्वे )
१७० न सर्वादिः
१७१ ( पूर्वावरं तृतीयायोगे )
१७२ नव पूर्वा वादौ
१७३ तीयं ङिति
१७४ विदिक् च
१७५ ङस्याद्यस्य
१७६ सामामः
१७७ युष्मदस्मद्भ्यामाकम्
१७८ ङश्शोभ्यसोऽश्नाभ्यम्
१७९ भ्योऽसोऽद्
१८० ङेसुटोऽम्
१८१ दोर्लुक्
१८२ ( वा )
१८३ अमौद्धल्याः
१८४ यौसि यः
१८५ मन्तस्य युवावौ द्वयोः
१८६ त्वमौ प्रत्ययोत्तरपदे चैकस्मिन्
१८७ + त्वाहौ सौ
१८८ + यूयवयौ जसि
१८९ + तुभ्यमह्यौ ङयि
१९० + तवममौ ङसि
१९१ पदाद्वाक्यस्य वन्नसौ युग्विभक्तेः
१९२ वांनावौ द्वित्वे
१९३ तेमयावेकत्वे
१९४ त्वामौ द्वितीयायाः
१९५ नेवामन्त्र्यं पूर्वम्
१९६ ( जस्विशेष्यं वाऽमन्त्र्ये )
१९७ ( न )
१९८ पादाद्योः
१९९ मनसीक्षार्थैः
२०० चवाऽहहैवयोगे

२०१ नित्यमन्वादेशे
२०२ ( पदात् प्रथमाया वा )
२०३ त्यदां द्वितीयाटौस्येनदेतदः
२०४ इदमः
२०५ ( स्भ्येऽश् )
२०६ अकः
२०७ टौस्यनः
२०८ दो मः
२०९ सौ
२१० पुंसीदोऽय्
२११ इय्
२१२ औस्सुलुक् चादसोऽनोः
२१३ वाकोऽस्योः
२१४ दस्सः
२१५ तोऽष्टानाम्
२१६ ससौ चात्
२१७ + किमः कः
२१८ भेऽपोऽद्
२१९ वाष्ट्ण आः
२२० रायः स्भि
२२१ त्रिचतुरः स्त्रियां तिसृचतसृ
२२२ ( रोऽनपोऽच्युः )
२२३ ( ङ्यौटि नीचो वा )

॥ इति शाकटायनीयसूत्रपाठे प्रथमस्याध्यायस्य द्वितीयः पादः समाप्तः ॥

---

१ क्रोष्टोः तृ
२ गुरूपोत्तमस्यानार्षेऽपत्येऽणिञः ष्यङ्
३ ( गोत्रावयवे वृद्धे )
४ ( रूढादिभ्यः )
५ ( देवयज्ञशुचिवृक्षसत्यमुग्रकण्ठेविद्धाद्वा )
६ ( सूत्याभोज्ये युवतिक्षत्रिये )
७ नृदुगिदञ्चोऽस्वस्रादेर्ङी
८ ( न हषोऽनुर्वनः )
९ पादो वा
१० कुम्भपद्यादौ
११ + ऋच्याङ्
१२ मन्नन्बहुव्रीहेर्न च
१३ अजाद्यताम्
१४ ठिट्टुण्ढेञणञ्गौरादिभ्यः
१५ यञोऽपावटात्
१६ ( यञ्यञलोहितादिशकलान्तकौरव्यासुरिमाण्डूकाङ्कुफट् )
१७ वयस्यनन्त्ये
१८ (बहुव्रीहेस्संख्यादेर्हायनात्)
१९ ( दाम्नः )
२० ऊध्नः
२१ ( अशिशोः )
२२ श्ववतो वा
२३ ( नाम्नि )
२४ अनाच्छादनाज्जातेः पूर्वप-

दात् क्तादजातकृतमितप्रति-
पन्नात्
२५ पाणिगृहीतीति पत्नी
२६ वाऽस्वाङ्गात्
२७ असहनञ्विद्यमानान्नासिको-
दरोष्ठजङ्घादन्तकर्णशृङ्गाङ्ग-
गात्रकण्ठाबह्वच्संयोगोपा-
न्त्यात् स्वाङ्गात् समासात्
२८ ( दीर्घजिह्वात् )
२९ ( पुच्छात् )
३० ( कबरमणिविषशरात )
३१ ( पक्षाच्चोपमानात् )
३२ ( न नखमुखान्नाम्नि )
३३ ( क्रोडादिभ्यः )
३४ ( करणात् क्रीतात् )
३५ ( क्तादल्पे )
३६ द्विगोः
३७ ( परिमाणादेव लुचोऽबि-
स्ताचितकम्बल्यात् )
३८ ( काण्डादक्षेत्रे )
३९ ( पुरुषात् प्रमाणाद्वा )
४० नः पत्यन्तस्य
४१ सपत्न्यादौ
४२ पतिवत्न्यन्तर्वत्न्याववविधवा-
गार्भिण्योः
४३ रोहिणरेवतान्नक्षत्रे
४४ नीलात् प्राण्योषध्योः
४५ ( नाम्नि क्ताच्च वा )
४६ ( केवलमामकभागधेयपापा-
वरसमानार्यकृतसुमङ्गलभेष-
जात् )
४७ ( कुण्डभाजगोणस्थलनाग-
कुशकामुककटकबरात् पात्र-
श्राणावपनाकृत्रिमस्थूलायस-
मैथुनेच्छुश्रोणिकेशवेशे )
४८ आर्यक्षत्रियाद्वान्
४९ धवाद्योगादज्येष्ठादिभ्यः
५० पूतक्रत्वग्निवृषाकपिकुसित-
कुसीदादैङ् च
५१ मनोर्वा ङैच्
५२ मातुलाचार्योपाध्यायादान् च
५३ वरुणेन्द्रमृडभवशर्वरुद्रादान्
५४ ( सूर्याद्देवतायाम् )
५५ आङ्
५६ ( यवनयवालिपिदुष्टे )
५७ हिमारण्यादुरौ
५८ वेदक्तिनो ङी
५९ गुणादुतोऽचोऽखरोः
६० ( चन्द्रभागान्नद्याम् )
६१ बह्वादेः
६२ ( शोणश्यैततहरितभरतरो-
हिताद्वर्णात्तो नश्च )
६३ क्रोऽसितपलितात्
६४ कालशबलसारङ्गपिशङ्गपिङ्ग-

लकलमाषात्
६५ जातेरस्त्रीयशूद्रात्
६६ ( पाककर्णपर्णवालान्तात् )
६७ ( पुष्पादसत्काण्डप्रान्तश-
तैकाश्चः )
६८ (फलादसंभस्त्राजिनैकशणपि-
ण्डात्)
६९ (मूलादनञः)
७० नुरितः
७१ ऊरुतोऽप्राणिनश्चायुरज्वा-
दिभ्यः
७२ +ऊरूत्तरपदादौपम्ये
७३ सहसफसहितसंहितलक्ष्मण-
वामादेः
७४ (बाह्वन्तकद्रुकमण्डलोर्नाम्नि)
७५ नारी सखी पंगूः श्वश्रूः
७६ यूनस्तित्
७७ ङ्यां वनो रः
७८ लुगतः
७९ मत्स्यतद्धितस्य हलो यः
८० सूर्यागस्त्ययोश्छे च
८१ (लुच्यगोणीसूच्योः प्यतः)
८२ (गोण्या ह्रस्वो मेये)
८३ (केऽणङ्चः)
८४ न कचि
८५ वाडः
८६ इच्चापुंसोऽनित्क्याडचसुपः
८७ स्वज्ञाजभस्त्राधातुक्यः
८८ द्येषसूतपुत्रवृन्दारकस्य
८९ ( वौ वर्तिका )
९० त्यायदाद्यतः
९१ नरिका मामिका
९२ तारकावर्णकाज्योतिस्तान्तवे
९३ योगे
९४ ( जातिर्बहुवद्वैकाख्याम् )
९५ ( द्वौ चास्मदोऽविशेषणे )
९६ ( फल्गुनी प्रोष्ठपदस्य
नक्षत्रम्)
९७ अव्ययात् स्वौजस्
९८ एकद्विबहौ
९९ आमन्त्र्ये
१०० हाधिक्समयानिकषोपर्युपर्य-
ध्यध्यधोऽधोऽत्यन्तरान्तरेण-
तस्पर्यभिसर्वाभयश्चाप्रधा-
नेऽमौट्शस्
१०१ वीप्स्यलक्षणेत्थंभवनेष्व-
भिना
१०२ भागिनि च प्रतिपर्यनुभिः
१०३ ( टार्थेऽनुना )
१०४ उत्कृष्टेऽनूपेन
१०५ कर्माणि
१०६ दिवः करणे वा
१०७ ( कर्म च )
१०८ ( न विनिमेयद्यूतपणम् )

१०९ ( वोपसर्गात् )
११० पणव्यवह्रोः
१११ स्मृत्यर्थदयीशां कर्म
११२ कृञः प्रतियत्ने
११३ ( रुजोऽज्वरिसंताप्योः कर्तरिभावे )
११४ हिंसायां जासनाटक्राथपिषनिप्रघ्नाम्
११५ आशिषि नाथः
११६ ( दृश्यभिवाद्योर्णेस्तङि )
११७ ( अकर्मकात् )
११८ ( नित्यकर्ममभिज्ञाद्यर्थशब्दकर्मदृशोऽखादादिक्रन्दशब्दायह्वः
११९ ( भक्षेर्हिंसायाम् )
१२० ( वहेः प्रवेयम् )
१२१ हृक्रोर्वा
१२२ शीङ्स्थासोऽधेराधारः
१२३ वसोऽनूपाध्याङः
१२४ अभिनिविशश्च
१२५ कालाध्वभावदेशं वा कर्म चाकर्मणाम्
१२६ कालाध्वनोर्व्याप्तौ
१२७ टाभ्यांभिस्सिद्धौ
१२८ हेतुकर्तृकरणेत्थंभूतलक्षणे
१२९ सहार्थेन
१३० यद्भेदैस्तद्वदाख्या
१३१ ( काले भाद्वाधारे )
१३२ प्रसितावबद्धोत्सुकैः
१३३ + समो ज्ञोऽस्मृतौ चाप्ये
१३४ + दाणाधर्मे तङ् च देयेः
१३५ ङे भ्यां भ्यस्
१३६ स्थानिवुणः
१३७ क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रतिकोपो न च कर्म
१३८ क्रुद्द्रुहान्नोपसर्गात्
१३९ स्पृहेर्वा
१४० मन्यस्याकाकादिषु यतोऽवज्ञा
१४१ भद्रायुष्यक्षेमसुखार्थहितार्थहितैराशिषि
१४२ शक्तार्थवषड्नमस्स्वस्तिस्वाहास्वधाहितैः
१४३ रुचिक्लृप्यर्थधारिभिः प्रेयविकारोत्तमर्णेषु
१४४ ( प्रत्याङः श्रुवाभ्यर्थके )
१४५ ( प्रत्यनोर्गृणाख्यातरि )
१४६ ( राधीक्षौ यद्दैवे )
१४७ उत्पातेन ज्ञाप्ये
१४८ श्लाघन्हुङ्स्थाशपा प्रयोज्ये
१४९ गत्न्हादिभिर्बहुलम्
१५० यदर्थम्
१५१ परिक्रये करणे वा
१५२ ङसिभ्यांभ्यस्तोकाल्पकति·

पयकृच्छ्रादसत्त्वे
१५३ आरादर्थैः
१५४ हेतौ गुणेऽस्त्रियाम्
१५५ ऋणे
१५६ अपायेऽवधौ
१५७ आख्यातर्युपयोगे
१५८ आङा
१५९ वर्ज्येऽपपरिणा
१६० प्रतिनिधिप्रतिदाने प्रतिना
१६१ स्थानिप्यकर्माधारे
१६२ दिक्छब्दान्यार्थाराद्बहिरितरैः
१६३ ङसोसाम्
१६४ स्तात्ता
१६५ करणे ज्ञोऽज्ञाने
१६६ कृत्कामुकस्यावुण्लक्तण्खार्थाव्ययैप्यद्गणेन: कर्मकर्त्रोः
१६७ क्तस्य सदाधारे
१६८ ( वानाकस्य क्तश्चद्विप्रासेः कर्तरि )
१६९ ( कर्मणि गुणे )
१७० ( न ध्यपः )
१७१ क्तेनो ङ्चोस्सुप्
१७२ हेतौ कर्मणा
१७३ (साधुनिपुणेनार्चायाम्)
१७४ स्वेशेऽधिना
१७५ (उपेनाधिकिनि)
१७६ आधारे
१७७ सुजर्थैः काले वा
१७८ ( कुशलायुक्तेनासेवायाम् )
१७९ +स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च
१८० यद्भावो भावलक्षणम्
१८१ त्र्यत्र्यी विभक्तिः
१८२ प्रथमादिः
१८३ +षष्ठी चानादरे
१८४ (गते स्थानिन्यध्वान्तेनैकः)
१८५ (सप्तमी)
१८६ कारकमध्येऽध्वकाले पञ्चमी च
१८७ चेष्टागत्याप्येऽनाक्रान्ते द्वितीयाचतुर्थ्यौ
१८८ तुल्यार्थैस्तृतीया
१८९ षष्ठी
१९० द्वितीया चैनेनानञ्चेः
१९१ पञ्चमी चर्ते
१९२ पृथग्नाना तृतीया च
१९३ विनेमास्तिस्रः
१९४ सप्तमी चासत्त्वारादर्थात्
१९५ हेतौ हेत्वर्थैः सर्वाः प्रायः

॥ इति शाकटायनीयसूत्रपाठे प्रथमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

१ लोऽन्ययुष्मदस्मात्सु तिप-
स्झिसिप्थस्थमिब्वस्मः
२ तातांझथासाथांध्वमिल्वहि-
महिङ्ङिदिच्छीयसंक्ष्णवर-
स्क्रुनिविशः
३ ऊद्व्यसोर्वोपसर्गात्
४ युजोऽजुदः
५ (न यज्ञे तत्पात्रे)
६ परिव्यवात् क्रियः
७ परावेर्जेः
८ ( कर्मणोदश्चरः )
९ समस्तृतीयया
१० क्रीडोऽकूजे
११ पर्यन्वाङः
१२ शपनाथशिक्षभुजादुपलम्भ-
नाशीर्जिज्ञासात्राणे
१३ हञो गतिताच्छील्ये
१४ न्यरसम्माननाचार्यकमृत्युत्स-
ञ्जनज्ञानव्ययविगणने
१५ ( कतृस्थेऽतनावाप्ये )
१६ म्रियतेर्लुङ्लिङ्लले:
१७ क्यषो वा
१८ लोः कृपः
१९ द्युम्द्योलुङः
२० वृम्द्यस्सस्यात्
२१ क्रमोऽनुपसर्गात्
२२ वृत्तिसर्गतायने
२३ पराोपात्
२४ वेः पदविक्षेपे
२५ प्रोपाभ्यां समर्थाभ्याम्
२६ ज्योतिरुद्गतावाङः
२७ नुप्रात्प्रच्छः
२८ गमेऽप्रतीक्षायाम्
२९ ह्वस्स्पर्धे
३० संनिवेः
३१ उपात्
३२ यमोऽविवाहे
३३ स्थः प्रतिमैत्रीदेवार्चासङ्गम-
मन्त्रकरणे
३४ लिप्सौ वा
३५ उदोऽनूर्ध्वेहे
३६ संविप्रावात्
३७ स्थेयप्रकाशने
३८ प्रतिज्ञाने
३९ समो गिरात्
४० अवात्
४१ संप्रतेर्ज्ञोऽस्मृतौ
४२ निह्नवे
४३ सनोऽननोः
४४ श्रुवोऽनत्याङः
४५ स्मृदृशः
४६ प्राग्वत्
४७ आमः कृञः
४८ न

४९ गन्धनावक्षेपसेवासाहसप्रतियत्नप्रकथनोपयोगेषु कृञः
५० प्रसहनेऽधेः
५१ दीप्तिज्ञानेहाविमत्युपसम्भाषोपमन्त्रणे वदः
५२ व्यक्तवाचां सहोक्तौ
५३ विप्रलापे वा
५४ कर्मण्यसत्यनोः
५५ ज्ञोपस्थः
५६ समोऽर्तिस्वरतिश्रुदृश्विद्गम्प्रच्छ्रृच्छः
५७ (वेः कृञः शब्दे चानाशे)
५८ यङ्घ्नः स्वेऽङ्गे चाङः
५९ व्युदस्तपः
६० न प्राणिन्यणिञो णिञन्तस्य
६१ (अनात्मन्यनाध्याने)
६२ भीष्मिल्यां षाकारे
६३ गृधिवञ्च्योर्विप्रलम्भे
६४ (मिथ्या कृञोऽभ्यासे)
६५ धेट्पाद्मायमायस्परिमुहरुचिनृतिवद्वस्यचल्यद्यर्थेङ्प्रद्रुस्रुबुधयुधनशजनः फलेशे पदाद्भुते तु वा
६६ ञीदिदपवदानुपसर्गेज्ञः
६७ यमस्समुदाङोऽग्रन्थे
६८ न पर्याङ्वे रमः
६९ उपात्
७० वाऽकर्मकात्
७१ व्यादाञोऽपराङ्गे
७२ परानोः कुः
७३ प्रत्यत्यभेः क्षिपः
७४ पाद्वहः
७५ परेर्मृषेश्च
७६ व्यतिहृतेऽगतिहिंसाशब्देह्रुवहश्चापरस्परान्योन्येतरेतरे
७७ कर्मभावे
७८ (माङ्लटश्शापेऽतङ्तङ्वच्छत्रानशौ)
७९ सलङ्वत्स्यल्लृटो वानितौ
८० लिटः क्वसुकानौ
८१ श्विण्वस्सदोऽनुवचश्च कर्तरि भूते
८२ अनाश्वान्
८३ दयायास्कास्गुर्विजाद्यनेकाचोऽनृच्छूर्णोराम् कृभ्वस्लिट् चानु
८४ जाग्रुषसमिन्धो वा
८५ भीह्रीभृहोः श्लुवत्
८६ विदात् कित्
८७ लेटः कृलेट्
८८ +झोऽन्तः
८९ ध्युक्तिजक्षपञ्चतोऽत्
९० तङोऽनतः
९१ शीङो रत्

९२ वेत्तेर्वा
९३ ए टितः
९४ वह्यामो गेश्
९५ +थासस्से
९६ लोराङ्गाङ्गारौरस्
९७ झेः
९८ लिटस्तझस्यैशिरे
९९ णभेरौशातः
१०० मिपोऽश्
१०१ अतङाणणशतुसुस्थाथुस-
ञ्णश्चमाः
१०२ +विदो लटो वा
१०३ शतुः क्वसुः
१०४ ब्रुवस्तिप्पञ्चतो णश्पञ्च-
द्ब्रुवश्चाहः
१०५ एर्ङितो लुक्
१०६ आद्विषो झेर्जुस्वा
१०७ सिविदज्झेरभ्वः
१०८ लेलेः
१०९ ङ्याट्क्यासट्
११० रन्नौ झलोः
१११ टीय्
११२ सट् त्थीयां लिङः
११३ तस्थस्थवस्मस्मेस्तान्तंतवमां
लेटश्च
११४ सीम्येर्ह्रुन्याम्
११५ म्वेनादेष्टाप्
११६ एतोऽगैप्
११७ स्वो वाम्
११८ भृशादौ हिः
११९ (थस्य वा)
१२० (ध्वेस्स्वः)
१२१ (तङः)
१२२ तुह्योस्ताद्वाशिषि
१२३ हि चाप्

॥ इति शाकटायनीयसूत्रपाठे प्रथम-
स्याध्यायस्य चतुर्थः पादः ॥

## समासोऽध्यायश्च प्रथमः ॥

---

१ ( सुप्सुपा समासो बहुलम् )
२ सुज्वार्थे संख्या संख्यया
संख्येये बहुव्रीहिः
३ ( आसन्नादूराधिकाध्यर्धार्धा-
दिडद्वितीयाद्यन्यार्थे )
४ अव्ययम्
५ एकार्थं च
६ मिथोग्रहणे प्रहरणे च स-
रूपं युद्धेऽव्ययीभावः
७ ( नदीभिर्नाम्नि )
८ ( संख्यावंश्यैश्च पूर्वपदार्थे )
९ पारे मध्येऽन्तष्षष्ठ्या
१० यावदवधारणे
११ वहिःपर्यपाङञ्च्
१२ लक्षणेनाभिप्रत्याभिमुख्ये

१३ दैर्घ्येऽनुः
१४ समीपे
१५ ( तिष्ठद्गुवादयः )
१६ नित्यं प्रतिनाऽल्पे
१७ ( पारिणाऽक्षशलाकासंख्यं द्यूते जये )
१८ शब्दप्रथासम्पत्समृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिसुप्पश्चाद्युगपद्यथासदृक्साकल्यान्तेऽव्ययम्
१९ यथाथाः
२० तिदुस्स्वत्याङ्क्न्यस्तत्पुरुषः
२१ गतादिषु प्रादयः
२२ स्वकृतास्युक्तम्
२३ ( टा )
२४ नञ्
२५ पूर्वापराधरोत्तरमंशिनाभिन्नेन
२६ समेऽर्धम्
२७ ( द्वित्रिचतुर्ड्वा )
२८ ( कालो द्विगौ च मेयैः )
२९ स्वयं सामि क्तेन
३० ( द्वितीया खट्वा क्षेपे )
३१ ( कालः )
३२ व्याप्तौ
३३ श्रितादिभिः
३४ ( प्राप्तापन्नं तया च )
३५ ईषद्गुणवचनैः
३६ तृतीया तत्कृतैः
३७ साधनं कृता
३८ ( पूर्वाद्यूनार्थैः )
३९ चतुर्थी प्रकृतिस्वार्थार्थादिभिः
४० तयालम्
४१ पञ्चमी भयादिभिः
४२ ( क्तेनासत्त्वे )
४३ षष्ठ्ययत्नात्
४४ याजकादिभिः
४५ ( पत्तिरथं गणकेन )
४६ ( वुनाजीवे )
४७ न कर्तरि
४८ कर्मणि त्ता च
४९ ( तृतीयायाम् )
५० तृप्तार्थाव्ययनिर्धार्यडच्छत्रानश्मतिपूजाधारक्तैः
५१ ( गुणैरस्वस्थैः )
५२ सप्तमी शौण्डादिभिः
५३ ( नाम्नि )
५४ ( ध्यपावश्यके )
५५ ( तत्राहोरात्रांशं क्तेन )
५६ ( काकादिभिश्च क्षेपे )
५७ पात्रेसमितादयः
५८ विशेषणं व्यभिचार्येकार्थे कर्मधारयश्च
५९ ( पूर्वकालैकसर्वजरत्पुराण-

नवकेवलम् )
६० (दिगधिकं संज्ञातद्धितोत्तरपदे)
६१ संख्या समाहारे च द्विगुश्चानाम्न्ययम्
६२ निन्द्योऽपापाणकेन
६३ गौणस्तेन
६४ व्याघ्रादिभिर्गौणैस्तदनुक्तौ
६५ (पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीरम्)
६६ (श्रेण्यादिः कृतादिभिश्च्वौ)
६७ (क्तम्नञादिभिन्नैः)
६८ (नानिटेट्)
६९ (सन्महत्परमोत्तमोत्कृष्टं पूजायाम्)
७० वृन्दारकनागकुञ्जरैः
७१ (कतरकतमं जातिप्रश्ने)
७२ +किं क्षेपे
७३ पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यायकधूर्तप्रसंसारूढैर्जातिः
७४ (चतुष्पाद्गर्भिण्या)
७५(खलतिजरत्पलितवलिनैर्युवा)
७६ (ध्यप्तुल्याख्यमजात्या)
७७ (वर्णैर्वर्णः)
७८ कुमारः श्रमणादिना
७९ मयूरव्यंसकादयः
८० द्वन्द्वस्सहोक्तौ
८१ (समानामेकः)
८२ (सुप्यसंख्येयः)
८३ त्यदादिः
८४ (भ्रातृपुत्रास्स्वसृदुहितृभिः)
८५ पिता मात्रा वा
८६ (श्वशुरः श्वश्रूभ्याम्)
८७ वृद्धो यूनानन्यार्थप्रकृतौ
८८ (पुरुषः)
८९ (स्त्रिया)
९० (ग्राम्यद्विखुरसंघेऽशिशौ स्त्री प्रायः)
९१ (नपुंसकमन्येनैकं च वा)
९२ (पुष्यार्थात् पुनर्वसुर्ज्योतिषि
९३ द्वन्द्वो वा
९४ (विरोध्यद्रव्यमभेदे)
९५ (अश्ववडवपूर्वापराधरोत्तराः)
९६ (पशुव्यञ्जनानि)
९७ (तरुतृणधान्यमृगपक्षिबह्वर्थांशः)
९८ सेनाङ्गक्षुद्रजन्तु
९९ फलं जातिः
१०० (शेषोऽप्राणी)
१०१ प्राणितूर्याङ्गम्
१०२ (चरणं स्थेणो लुङ्यनुवादे)
१०३ (नित्यवैरा वैरे)

